तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हिं पद्यसे ।

अस्या गायत्र्या उपस्थानमुच्यत इत्यर्थः । हे गायत्रि त्वं भूर्भुवः-स्वर्लक्षणेनैकेन पदेनैकपद्यासि । त्रयीलक्षणेन पदेन द्विपदी । प्राणादिना तृतीयेन पदेन त्रिपदी । तुरीयेण पदेन परोरजसा चतुष्पद्यासि । अपदसि । तदुपपादयति—न हि पद्यस इति । पद्यसे गम्यसे ज्ञायस इत्यर्थः । अपरिच्छिन्नमहिमत्वात्परिच्छिन्नतया ज्ञातुं न शक्यस इत्यर्थः । तुरीयं पादं नमस्यति—

नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स काम ऋध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ ७ ॥

यं द्विष्यादसौ शत्रुरदोऽस्मै शत्रवे यं शत्रुमुद्दिश्य गायत्रीमुपतिष्ठते तस्मै तस्य कामो न ऋद्धिमाप्नोति । इदं वाञ्छितं मा प्रापन्मैव प्राप्नोति । असौ कामोऽस्मै शत्रवे मा समृद्धी मा भूत् । व्रीह्यादित्वादिनिः । अहमदः श्रेयः प्रापं प्राप्तवानस्मीति य उपतिष्ठते तस्य तत्प्राप्नोतीत्यर्थः । एवं चैषां त्रयाणां मन्त्राणां विकल्पेन प्रयोग इति द्रष्टव्यम् ॥ ७ ॥

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच ।

एतद्गायत्रीविज्ञानं प्रस्तुत्य वैदेहो जनको नाम्ना बुडिलमश्वतराश्वस्यापत्यमाश्वतराश्विमुवाच ।

यन्नु भो तद्गायत्रीविदब्रूथाः ।

यद्गायत्रीविदस्मीत्यब्रूथास्तस्य वचसोऽननुरूपमिदमित्यर्थः । कुत इत्यत्राऽऽह—

अथ कथꣳ हस्तीभूतो वहसीति ।

हस्तीव प्रतिग्रहादिजन्यं पापं वहसि अथाप्यहं गायत्रीविदिति ब्रूषे वै(नै)तदनुरूपमित्यर्थः ।

स आह—

मुखꣳ ह्यस्याः सम्राण्न विदांचकारेति होवाच ।

हे सम्राड्गायत्रीं जानेऽपि तु तस्या मुखं न ज्ञातवानस्मि अतः पापं वहामीत्युक्तवान् ।

इतर आह—

तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवा-
ग्नावभ्यादधाति सर्वमेवैतत्संदहत्येवꣳ हैवैवं-
विद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्सं-
साय शुद्धः पूतोऽमृतोऽजरः संभवति ॥ ८ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
चतुर्दशं ब्राह्मणम् ॥ १४ ॥

---

गायत्र्या अग्निर्मुखं यदि बह्वपीन्धनमग्नौ प्रतिक्षिपति तत्सर्वं दहति एवमेवंविद्बह्वपि कृतं पापं संसाय घोऽन्तकर्मणि दग्ध्वेत्यर्थः । पूतो ब्रह्मविद्याप्रतिबन्धकपापरहितः संपन्नब्रह्मविद्यो जरामरणशून्यो भवतीत्यर्थः ॥ ८ ॥

इति बृहदारण्यकोपनिषत्प्रकाशिकायां पञ्चमाध्यायस्य
चतुर्दशं ब्राह्मणम् ॥ १४ ॥

---

अर्चिराद्यातिवाहिकानुप्रविष्टादित्यप्रार्थनामन्त्रः—

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।

सत्यस्य ब्रह्मणो मुखं द्वारं ब्रह्मगमनमार्गमिति यावत् । हिरण्मयेन पात्रेण तेजिष्ठेन तेजोमण्डलेन पिहितमावृतम् ।

तत्त्वं पूषन्नपावृणु ।

तद्द्वारं हे पूषन्निरावृतं कुरु ।

किमर्थमित्यत्राऽऽह—

योह वै प्रतिष्ठां वेद प्रतितिष्ठति समे
प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि
समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे
प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥

चक्षुषः प्रतिष्ठात्वं नाम समविषमदेशप्रदर्शनद्वारा पुरुषप्रतिष्ठाहेतुत्वम् । शिष्टं पूर्ववत् ॥ ३ ॥

यो ह वै संपदं वेद सꣳ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः
सꣳहास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥

अस्मै स संपद्यते । श्रोत्रे सत्येव हि सर्वे वेदाः संपन्ना भवन्ति । तस्मात्संपन्नत्वगुणकं श्रोत्रं यो वेद तस्य काम्यमानः कामः संपद्यत इत्यर्थः ॥ ४ ॥

यो ह वा आयतनं वेदाऽऽयतनꣳ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ।

इन्द्रियाणां मनोधीनप्रवृत्तिकत्वादिन्द्रियान्तरापेक्षया मनस आयतनत्वम् । अत एव जनानामप्यायतनत्वम् । शिष्टं स्पष्टम् ।

यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै
प्रजापतिः प्रजायते ह वै प्रजया पशुभिर्य एवं वेद ॥६॥

रेतःशब्देन प्रजननेन्द्रियं लक्ष्यते । तेन हि पुत्रपौत्रादिमत्तया प्रकृष्टतया जायते पुरुष इति प्रजापतिः ॥ ६ ॥

ते हेमे प्राणा अहꣳश्रेयसे विवदमाना
ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति

तद्धोवाच यस्मिन्व उत्क्रान्त इदꣳ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥

ते हेमे वागादयः प्राणा अहमर्थस्याऽऽत्मनः श्रेयसे विवदमाना चतुर्मुखं गत्वाऽस्माकं मध्ये कः श्रेयानिति तद्ब्रह्म प्रति होचुः । तच्च ब्रह्म प्रत्युवाच । युष्माकं मध्ये यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव जनो मन्यते स श्रेष्ठ इति प्रत्युवाचेत्यर्थः ॥ ७ ॥

वाग्घोच्चक्राम सा संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥८॥

तत्र प्रथमतः परीक्षार्थं वागुत्क्रान्ता सती संवत्सरं प्रवासं कृत्वा पुनरागत्य हे प्राणा मदृते मां विना जीवितुं कथमशकत कथं शक्ता इत्युवाच । ते होचुर्यथाऽकला मूका वाचाऽवदन्तोऽपि प्राणेन जीवन्तश्चक्षुरादिना दर्शनादिकं कुर्वन्त आसत एवं वयमपि अजीविष्म जीवितवन्त इति होचुः । ततः शरीरे वागिन्द्रियं प्रविवेश । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ८ ॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥९॥

श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसै-वमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवꣳ हैवेमान्प्राणान्संववर्ह ।

मुख्यः प्राण उत्क्रमिष्यन्सन्यथा लोके शोभनो हयः सिन्धुदेशप्रभवः परीक्षणायाश्वारोहेणाऽऽरूढः पड्वीशशङ्कून्पड्वीशाश्च ते शङ्कवश्च पादबन्धनशङ्कूनुत्खनेदेवं सर्वान्प्राणानुत्खखानोरवातवान् ।

ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति॥१३॥

ते प्राणा आगम्य हे भगवन्पूजार्ह मुख्यप्राण त्वमुत्क्रमणं मा कार्षीस्त्वां विना जीवितुं न शक्ष्याम इति होचुः । स प्रत्युवाच तस्यो मे श्रेष्ठस्य पूर्वं बलिं कुरुत करं प्रयच्छतेति । उशब्दोऽवधारणे । तथे-त्येव तेऽपि प्रत्यूचुः ॥ १३ ॥

सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति ।

यद्येन गुणेनाहं वसिष्ठाऽस्मि तत्तेन त्वमेव वसिष्ठोऽसि मद्वसिष्ठत्वं त्वदधीन[ मिति ]वागुवाचेत्यर्थः । वैशब्दोऽवधारणे । एवमुत्तरत्रापि द्रष्टव्यम् ।

यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति चक्षु-
र्यद्वा अहꣳ संपदस्मि त्वं तत्संपदसीति श्रोत्रं
यद्वा अहमायतनमास्मि त्वं तदायतनमसीति
मनो यद्वा अहं प्रजापतिरस्मि त्वं तत्प्रजापति-
रसीति रेतस्तस्यो मे किमन्नं किं वास इति ।

एतादृशगुणविशिष्टस्य मेऽन्नं किं वस्त्रं किमिति मुख्यः प्राण इतरान्प्राणान्पप्रच्छेत्यर्थः ।

ते होचुः—

यदिदं किं चाऽऽ श्वभ्य आ कृमिभ्य आ
कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति ।

श्वकृम्यादिपर्यन्तप्राणिजातस्य यदन्नं तत्सर्वं प्राणस्य तेऽन्नमापो वासः । सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं कर्तव्यमप्सु च वासस्त्वचिन्तनं कर्तव्यमित्यर्थः । न तु सर्वभक्षणं कर्तव्यम् । अद्भिर्वाऽऽच्छादनं कार्यमिति वा तस्यासंभवादिति द्रष्टव्यम् ।

सर्वप्राणिजातान्नेऽन्नत्वचिन्तनं स्तौति—

न ह वा अस्यानन्नं जग्धं भवति नानन्नं
प्रतिगृहीतं य एवमेतदन्नस्यान्नं वेद ।

सर्वप्राण्यन्ने प्राणान्नचिन्तनं कुर्वतो नाभक्ष्यं भक्षितं भवति अभक्ष्यभक्षणे न दोष इत्यर्थः । नानन्नं गजाश्वादिकं प्रतिगृहीतं भवति गजाश्वप्रतिग्रहादिना न दोष इति भावः । 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' [ ब्र० सू० ३ । ४ । २८ ] इति सर्वान्नानुमतेः प्राणात्ययविषयत्वसमर्थनादभक्ष्यभक्षणादौ दोषाभावप्रतिपादकमपि आपद्विषयमेव द्रष्टव्यम् ।

तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽ-
चामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

———

यस्मादपां वासस्त्वमनुसंधातव्यं तस्माद्धेतोः श्रोत्रिया विद्वांस आचमनीयाभिरद्भिर्वासोभिरेतदनं प्राणमनग्नं कुर्वन्तो मन्यमाना अन्नात्पूर्वं पश्चाच्चाऽऽचामन्तीत्यर्थः । अत्रानग्नं कुर्वन्तो मन्यन्त इत्युक्त्या वासस्त्वचिन्तनमर्थसिद्धम् । वासःकार्यत्वादनग्नताया इति द्रष्टव्यम् । भाष्योदाहृतम् 'तस्मादेवंविदशिष्यन्नाचामेत्' इत्यादिवाक्यं माध्यंदिनशाखागतं द्रष्टव्यम् ॥ १४ ॥

इति बृहदारण्यकोपनिषत्प्रकाशिकायां षष्ठाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

---

प्रकृतिविविक्तजीवयाथात्म्यविषयां पञ्चाग्निविद्यां संसृतिवैराग्याय प्रस्तौति—

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम ।

नाम्ना श्वेतकेतुः । आरुणेरपत्यमारुणेयः । स पञ्चालानां देशानां परिषदं समाजं स्ववैदुष्यप्रकटनायाऽऽजगाम ।

स आजगाम जैवलिं प्रवाहणं परिचारयमाणम् ।

जीवलस्यापत्यं जैवलिः । तं प्रवाहणनामानं राजानं स्वभृत्यैरात्मनः परिचर [णं] कारयन्तमागच्छत् ।

तमुदीक्ष्याभ्युवाद कुमारा ३ इति स
भो ३ इति प्रतिशुश्रावानुशिष्टोऽ-
न्वसि पित्रेत्योमिति होवाच ॥१॥

स राजा तमुद्वीक्ष्य कुमारा ३ इत्यामन्त्रितवान् । आमन्त्रणे प्लुतिः । स भो ३ इति प्रतिशुश्राव । अथ राजा पित्रा विद्यामनुशिष्टोऽसीति पप्रच्छ । अनुशिष्टोऽस्मीतीतर उवाच ॥ १ ॥

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता ३ इति ।

प्रयत्यो म्रियमाणा इमाः प्रजा यथा येन प्रकारेण विशिष्टदेशं प्रतिपद्यन्ते प्रश्ने प्लुतिः । इति वेत्थ जानासि किमेवं गन्तव्यदेशप्रश्नः । एवं पृष्टः कुमारः—

नेति होवाच ।

अथ पुनः पृच्छति—

वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति ।

इमं लोकं येन प्रकारेण पुनरागच्छन्तीति ।

नेति हैवोवाच ।

इत्तर इति शेषः । पुनः पृच्छति—

वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः
पुनः प्रयद्भिर्न संपूर्यता३ इति ।

असौ स्वर्लोकोऽनवरतमागच्छद्भिः पुरुषैः कुतो न संपूर्यते ।

नेति हैवोवाच ।

पुनः पृच्छति—

वेत्थो यावतिथ्यामाहुत्याᳵ हुतायामापः पुरुष-
वाचो भूत्वा समुत्थाय वदन्ती३ इति ।

यावतां पूरणी यावतिथी । 'तस्य पूरणे डट्' इति डटि 'वतोरिथुक्' इतीथुगागमः । यावत्संख्याकायामाहुत्यां हुतायामापः पुरुष इति वाग्यासां ताः पुरुषवाचः पुरुषशब्दवाच्या भूत्वा पुरुषाकारपरिणता भूत्वा समुत्थाय वदन्ति अभिलपनं कुर्वन्त आसत इत्यर्थः ।

नेति हैवोवाच ।

पुनः पृच्छति—

वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा ।

देवयानस्य वा पितृयाणस्य वा पथः प्रतिपदं किं वेत्थ । प्रतिपद्यतेऽनेनेति प्रतिपत् । प्रथमं पर्व ।

तदेव स्पष्टयति—

यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यते पितृयाणं वा ।

यत्कृत्वा यदुपक्रम्येत्यर्थः । देवयानापितृयाणव्यावर्तकाकारप्रश्नोऽयमिति द्रष्टव्यम् । भाष्ये छान्दोग्यपञ्चाग्निविद्याप्रश्नानुक्रमेण कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारं देवयानापितृयाणपथव्यावर्तनेऽमुष्यं लोकस्य

प्रागारं च वेत्थेति पृष्ट्वा 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति पप्रच्छेति भाषितत्वादिहापि तन्मात्रपर्यवसानं युक्तम् ।

अपि न ऋषेर्वचः श्रुतम् ।

अस्मिन्देवयानपितृयाणविषय ऋषेर्मन्त्रस्य वचनं नोऽस्माकं श्रुतम् ।

कोऽयं मन्त्र इत्याह—

द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति ।

द्वे सृती गती अशृणवमहं श्रुतवानस्मि पितृणां मनुष्याणां देवानां च । एजद्गच्छत्प्राणिजातं ताभ्यां सृतीभ्यां समेति ब्रह्माण्डान्तर्गतं लोकजातं समेति मातापितृशून्यं भगवल्लोकं च समेतीत्यर्थः । पितृयाणेन पथाऽण्डान्तर्वर्तिलोकं समेति उत्तरेण पथा भगवल्लोकं समेतीत्यर्थः ।

एवं पृष्टः कुमार आह—

नाहमत एकंचन वेदेति होवाच ॥ २ ॥

एषां मध्ये न किंचिदपि वेदेत्युक्तवानित्यर्थः ॥ २ ॥

अथ हैनं वसत्योपमन्त्रयांचक्रे ।

एनं श्वेतकेतुं वसत्या हेतुनोपामन्त्रयत कुमारं वासं प्रार्थितवानित्यर्थः ।

अनादृत्य वसतिं कुमारः प्रदुद्राव ।

राजसमीपाच्छीघ्रं निर्जगामेत्यर्थः ।

स आजगाम पितरं तꣳ होवाचेति वाव किल नो भवान्पुराऽनुशिष्टानवोचदिति ।

पुरा समावर्तनकाले नोऽस्मान्प्रति भवाननुशिष्टान्सर्वविद्याविदो वाव किलावोचदुक्तवानिति ।

एवं सामर्षेण पुत्रेणोक्तः पिताऽऽह—

कथं सुमेध इति ।

नानुशिष्टोऽसीति शेषः ।

इतरोऽननुशासनं दर्शयति—

पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकंचन वेदेति ।

राजन्यबन्धू राजन्याभासः । राजन्यानां बन्धू राज्यन्यबन्धुः । स्वयं राजन्य एव सन्राजन्यानां बन्धुरिति निन्द्यते । स पञ्च प्रश्नान्मां पृष्टवान् । तत्र किमपि न वेद्मीति ।

पिता पृच्छति—

कतमे त इति ।

ते प्रश्नाः कीदृशा इत्यर्थः ।

पुत्र आह—

इम इति ह प्रतीकान्युदाजहार ॥ ३ ॥

इम इत्येवमेकदेशान्सूचितवानित्यर्थः ॥ ३ ॥

स होवाच तथा नस्त्वं तात जानीथा
यथा यदहं किंच वेद सर्वमहं तत्तुभ्यमवोचं
प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति ।

हे तातास्मांस्त्वं तथा जानीथा येन प्रकारेणाहं यत्किंच वेद तत्सर्वं तुभ्यमहमवोचमिति । ततश्च मयैते प्रश्ना नावगता इति मया नोक्तोऽतस्त्वं च प्रेहि आगच्छाऽऽवां राज्ञः समीपं प्रतीत्य गत्वा विद्यार्थं ब्रह्मचर्यं वत्स्याव इति ।

इतर उवाच—

भवानेव गच्छत्विति ।

नाहं तस्य मुखं निरीक्षितुमुत्सह इति भावः ।

स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास ।

आसनमित्यर्थः ।

तस्मा आसनमाहृत्योदकमाहारयांचकार ।

तस्मै गौतमाय राजाऽऽसनं दत्त्वा पाद्यार्थमुदकं भृत्यैरानीतवानित्यर्थः ।

अथ हास्मा अर्घ्यं चकार ।

अस्मै गौतमायार्घ्यं कृतवानित्यर्थः ।

तꣳ होवाच वरं भगवते गौतमाय दद्म इति ॥ ४ ॥

भगवते गौतमाय गवादिलक्षणं वरं प्रयच्छाम इति गौतममुक्तवानित्यर्थः ॥ ४ ॥

स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥

स होवाच गौतमो वरो दीयत इति त्वया प्रतिज्ञातश्चेद्यां वाचं मम कुमारस्य समीपे वाचमभाषथास्तामेव वाचं ब्रूहि तानेव प्रश्नान्मे ब्रूहीत्यर्थः ॥ ५ ॥

स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥

यत्त्वं प्रार्थयसे तद्दैवेषु वरेष्वन्तर्गतं तन्न प्रार्थनीयं मानुषाणां वराणां मध्ये किंचिद्वृणुष्वेति ॥ ६ ॥

स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य ।

स होवाच गौतमस्तव हिरण्यस्य गोअश्वानां सर्वत्र विभाषा गोरिति प्रकृतिभावः । दासीनां प्रच्छदपटानामधोंऽशुकलक्षणस्य परिधानस्यापात्तं प्राप्तं प्राप्तिरिति यावत् । अस्ति मया ज्ञायते । एतैर्मानुषैर्वित्तैर्मम प्रयोजनं नास्तीत्यर्थः ।

मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति ।

प्रभूतस्यानन्तफलस्य पुत्रपौत्रगामिणो विद्यारूपद्रविणस्य नोऽस्मान्प्रति भवानवदान्यो मा भूदिति । सर्वेषां दाता भवानस्माकं कुतो न प्रयच्छसीति भावः ।

एवमुक्तो राजाऽऽह—

स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति स होपायनकीर्त्योवास ॥ ७ ॥

हे गौतम स त्वं तीर्थेन न्यायेन शास्त्रविहितेन विद्यां मत्त इच्छासा इच्छस्वेत्युक्तो गौतम [ आह ] उपैमि उपगच्छामि शिष्यत्वेनाहं भवन्तमिति । वाचा ह स्मैव किल पूर्वे ब्राह्मणा वर्णावरानुपयन्ति न तु

शिष्यवृत्त्योपगच्छन्ति । अतः स गौतमोऽपि शिष्यत्वेनोपैमीति उपगमनमात्रेणैवोवासोषितवान्नोपगमनशुश्रूषादिकं कृतवानिति भावः ॥७॥

स होवाच तथा नस्त्वं गौतम माऽपराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिꣳश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥

स राजोवाच हे गौतम तव च पितामहा यथा नः पूज्यास्तथा त्वमपि पूज्य एव । 'स वै गौतम तीर्थेनच्छासै' इति चिरवासाज्ञापनकृतमदीया अपराधा मा गणनीयाः । इयं च विद्येतः पूर्वं कस्मिंश्चिदपि ब्राह्मणे नोवास स्थितवती तादृशीं ब्राह्मणैरितः पूर्वमलब्धां विद्यां तुभ्यं वक्ष्यामि को वा निकृष्टं प्रति शिष्योऽहं भवामीति वदन्तं त्वां प्रत्याख्यातुमर्हति । अतो दुर्लभामपि विद्यां तुभ्यं वक्ष्यामीत्यर्थः ॥ ८ ॥

तत्र वेत्थो यावतिथ्यामाहुत्याꣳ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति प्रश्नस्य प्रतिवचनमाह—

असौ वै लोकोऽग्निर्गौतम तस्याऽऽदित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥ ९ ॥

हे गौतमासौ द्युलोक एवाग्निस्तस्याऽऽदित्य एव समित् । आदित्येन हि द्युलोको दीप्यते । आदित्यरश्मयो धूमः । आदित्यरूपसमित्प्रभवत्वात् । अहरर्चिः प्रकाशवत्त्वात् । दिशोऽङ्गाराः । अवान्तरदिशो विस्फुलिङ्गा दिशामवान्तरदिशां चाहोरूपार्चिःप्रादुर्भावाधीनाभिव्यक्तिकत्वेनाङ्गारत्वविस्फुलिङ्गत्वे । तस्मिन्नेतस्मिन्नग्ना आदित्यादिलक्षणसमिदाद्युपेतेऽग्नौ देवा इन्द्रियाणि श्रद्धां जुह्वति । 'श्रद्धा वा आपः' इति श्रद्धाशब्देनाऽऽप उच्यन्ते । आत्मधर्मभूतायाः श्रद्धाया होतव्यत्वासंभवात् । एतच्च 'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः' [ब्र०सू३।१।५] इति सूत्रभाष्ययोः स्पष्टम् । तत्रापि न जलमात्रं किंतु भूतसूक्ष्माणां सक-

षामुपलक्ष[णम्]कम् । एतच्च 'त्र्यात्मकत्वात्तु भूयस्त्वात्'। [ब्र०सू०३।१।२] इति भाष्ये स्पष्टम् । नचेन्द्रियाणां द्युलोकाग्नौ भूतसूक्ष्मरूपाहुतिप्रक्षेपे कथं होतृत्वमिति वाच्यम् । इन्द्रियाणाममभावे भूतसूक्ष्माणां जीवं परिष्वज्य द्युलोकादिगमनासंभवात्तस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति देवशब्दितानामिन्द्रियाणां होतृत्वोक्तिर्न विरुध्यत इति द्रष्टव्यम् । तस्या आहुत्यै तस्या आहुतेरित्यर्थः । विभक्तिव्यत्ययश्छान्दसः । सोमो राजा संभवति देवभोग्यदिव्यदेहयुक्तो भवतीत्यर्थः । एवमुत्तरत्रापि समिद्धूमार्चिरङ्गारविस्फुलिङ्गत्वकल्पनेषु किंचित्साधर्म्यं बुद्धिमद्भिरूह्यम् ॥ ९ ॥

पर्जन्यो वा अग्निर्गौतम ।

वृष्टिप्रवर्तको देवः पर्जन्यः ।

तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुत्यै वृष्टिः संभवति ॥ १० ॥

संवत्सर एव समिदिति । शरदादिग्रीष्मान्तैः संवत्सरावयवैरेव पर्जन्याग्नेर्दीप्यमानत्वात् । ह्रादुनयः स्तनयित्नुशब्दाः । [ विस्फुलिङ्गाः ] विप्रकीर्णत्वानेकत्वसामान्यात् । सोमं राजानं जुह्वति । कर्मफलभोगावसानेऽमृतमयदिव्यदेहो द्रवीभूतः सन्देवशब्दवाच्यैरिन्द्रियैः सहः पर्जन्ये पततीत्यर्थः । शिष्टं स्पष्टम् ॥ १० ॥

अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिः ।

अयं समुद्रपर्वतादियुक्तो लोकोऽग्निः । पृथिव्यंशस्तु समित् । अग्निर्धूमः समिदाश्रितत्वाद्धूमस्याग्नेरपि पृथिवीरूपसमिदाश्रितत्वादग्नेर्धूमत्वं युक्तम् । रात्रिरर्चिः । अर्चिःप्रकाशस्य रात्र्यधीनत्वाद्रात्रिरेवार्चिरित्यर्थः ।

चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नꣳ संभवति ॥ ११ ॥

पुरुषो वा अग्निर्गौतम तस्य व्यात्तमेव समित् ।

विवृतं मुखमेव समिदित्यर्थः ।

प्राणो धूमो वागर्चिः ।

प्रकाशकत्वसामान्याद्वागिन्द्रियमर्चिरित्यर्थः ।

चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ
देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति॥१२॥

आहुत्या आहुतेरित्यर्थः ॥ १२ ॥

योषा वा अग्निर्गौतम ।

योषा स्त्री ।

तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिः ।

वर्णसाम्याद्योनेरर्चिष्ट्वम् ।

यदन्तः करोति तेऽङ्गाराः ।

अन्तःकरणं नाम मिथुनीकरणम् ।

अभिनन्दा विस्फुलिङ्गाः ।

क्षुद्रत्वसाम्यात् ।

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति
तस्या आहुत्यै पुरुषः संभवति ।

एवं यावतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति प्रश्नस्योत्तरमुक्तम् ।

अन्येषामपि प्रश्नानामुत्तरं वक्तुं प्रसङ्गं संपादयति—

स जीवति ।

पुरुषः । एवं क्रमेण रेतोरूपायामाहुतौ पुरुषाकारो जातः सञ्जीवति ।

कियन्तं कालमित्यत्राऽऽह—

यावज्जीवतीति ।

यावदस्मिञ्छरीरे स्थितिनिमित्तं कर्म विद्यते तावदित्यर्थः ।

अथ यदा म्रियते ॥ १३ ॥

अथ तत्कर्मक्षये यस्मिन्काले म्रियत इत्यर्थः ॥ १३ ॥

अथैनमग्नये हरन्ति ।

अग्नयेऽग्न्यर्थमग्नौ होमायावयविनं मृतमृत्विजो हरन्ति ।

तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णो भवति ॥ १४ ॥

तस्याश्च षष्ठ्या आहुतेरग्निसमिदादिकं न काल्पनिकमपि तु स्वाभाविकमेव तस्मिन्नग्नावृत्विग्भिरसौ स्वर्गाय लोकाय स्वाहेति यजमाने हुते सति दीप्यमानशरीरो यजमानो निष्पद्यते ॥ १४ ॥

इदानीं प्रथमप्रश्ननिर्णयार्थमारभते—

ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धाꣳ सत्यमुपासते ।

येऽनेन प्रकारेण पञ्चाग्नीन्विदुः । द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेष्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोनुषक्ततया संचरन्तं प्रत्यगात्मानं ब्रह्मात्मकत्वेन य उपासत इति यावत् । ये चामी पुरुषा अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य सत्यशब्दितं परमात्मानं प्रत्यगात्मनि उपासते ।

तेऽर्चिरभिसंभवन्ति ।

उभयेऽपि अर्चिरभिमानिनीं देवतां संगता भवन्तीत्यर्थः ।

अर्चिषोऽहः ।

सर्वत्र संभवतीत्यनुषङ्गः ।

अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति ।

उदङ्ङुदङ्मुखमित्यर्थः । उदग्देश इति वा । अत्राहःपूर्वपक्षादिशब्दास्तत्तदभिमानिदेवतापराः ।

मासेभ्यो देवलोकम् ।

अत्र मासेभ्यः संवत्सरमिति च्छान्दोग्ये श्रवणादधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशस्य प्राग्दृष्टत्वान्मासानन्तरं संवत्सरमभि-

संभवन्ति । संवत्सरद्वारा देवलोकमित्यर्थः । अत्र देवलोकशब्दो वायुपरः । 'योऽयं पवत एष देवानां गृहे' इतिप्रसिद्धेः । इतरथा देवलोकादादित्यमित्यादित्यानन्तरपूर्वपूर्वतया वायुनिर्देशकस्यास्य वाक्यस्य 'स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' [ बृ० ५।१०।१ ] इति वायोरादित्यसमनन्तरपूर्वपूर्वत्वप्रतिपादकश्रुतिविरोधप्रसङ्गात् । अतो देवलोकवायुशब्दयोरेकार्थत्वं वक्तव्यम् । एतत्सर्वं 'वायुमब्दादविशेषविशेषाभ्याम्' [ ब्र० सू० ४ । ३ । २ ] इति सूत्रभाष्ये स्पष्टम् ।

देवलोकादादित्यमादित्याद्वैद्युतम् ।

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' इति मध्ये चन्द्रमसः श्रवणाच्चन्द्रद्वारा विद्युदभिमानिनीं देवतां प्राप्नुवन्तीत्यर्थः ।

तान्वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति ।

वैद्युताद्वैद्युत इत्यर्थः । वैद्युतः पुरुषोऽमानवः परेण ब्रह्मणा मनसा सृष्टोऽमानवशब्दितः पुरुषः स एनान् [ ब्रह्मलोकान् ] गमयति । छान्दोग्ये 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति' [ ५ । १० । १ ] इति वैद्युतस्यामानवशब्दितस्यैव ब्रह्मगमयितृत्वश्रवणाद्वैद्युतेनैव ततस्तच्छ्रुतेः [ ब्र० ४।३।६ ] इति [ सूत्रित ]त्वाच्च विद्युत उपरि वैद्युतेनामानवेनैवाऽऽतिवाहिकेन विदुषामा ब्रह्मप्राप्तेर्गमनमिति भाष्यानुसाराच्च वैद्युतादिति पदं प्रथमान्ततया व्याख्येयम् । ब्रह्मलोकान् । अत्र निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्ततयाऽर्थस्यैकत्वे निश्चिते बहुवचनस्यादितिपाशानितिवदुपपत्तेः । षष्ठीतत्पुरुष इति पक्षेऽपि न दोषः । न च भगवल्लोकस्यैकतया बहुवचनानुपपत्तिरिति वाच्यम् । परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसंकल्पस्य श्रुतिस्मृतीतिहासपुराणप्रामाण्यानुसारेण स्वेच्छापरिकल्पितस्वासाधारणाप्राकृतलोकानन्त्यसंभवेऽनुपपत्त्यभावात् । एतत्सर्वं 'परं जैमिनिर्मुख्यत्वात्' [ ब्र० सू० ४ । ३ । १२ ] इति सूत्रभाष्ये स्पष्टम् ।

ते तेषु ब्रह्मलोकेषु पराः परावतो वस-
न्ति तेषां न पुनरावृत्तिः ॥ १५ ॥

अर्चिरादिना गतास्ते सर्वे तेषु लोकेषु परा निरतिशयानन्दैश्वर्यशालिनः परावतो नाथवन्त इति यावत्। परमात्मना सनाथास्तेनानुगृहीतास्तद्दत्तानि भोग्यभोगस्थानभोगोपकरणानि भुञ्जानाः सुखेन तत्रैवाऽऽसते तेषां न पुनःसंसारबन्ध इत्यर्थः ॥ १५ ॥

अथ ये यज्ञेन दानेन तपसा लोका-
ञ्जयन्ति ते धूममभिसंभवन्ति ।

ये प्रत्यगात्मानं ब्रह्मात्मकं वा प्रत्यक्छरीरकं ब्रह्म वाऽनुपासीनाः सन्तो यज्ञदानानशनादिकर्मरताः सन्तो लोकान्गच्छन्ति ते धूमाभिमानिनीं देवतां गच्छन्ति ।

धूमाद्रात्रिम् ।

राञ्यादिशब्दास्तत्तदभिमान्यातिवाहिकदेवतापराः ।

रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मा-
सान्दक्षिणाऽऽदित्य एति मासेभ्यः पितृलोकं
पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ।

तत्रत्यानामाजानदेवानां भोगोपकरणं भवन्तीत्यर्थः ।

ताꣳस्तत्र देवा यथा सोमꣳ राजानमाप्या-
यस्वापक्षीयस्वेत्येवमेनाꣳस्तत्र भक्षयन्ति ।

यथा सोमं राजानं यज्ञ ऋत्विज आप्यायस्वापक्षीयस्वेति भक्षयन्ति एवमेनांस्तत्र देवा भक्षयन्ति। आप्यायस्वापक्षीयस्वेति ‘ क्रियासमभिहारे लोट्लोटो हिस्वौ वा च तध्वमोः’ इति स्वादेशः। प्यैङ् वृद्धौ। क्षि क्षये। अपक्षीणान्पुनराप्याययन्ति । आप्यायितानां च भक्षणेन क्षयं कुर्वन्ति। एवं देवा अपि चन्द्रलोकस्थानुपकरणभूतान्कर्मिणः पुनः पुनर्विश्रामयन्तः स्वस्वभोगोपकरणभूतान्कुर्वन्तीत्यर्थः। तेषां चन्द्रलोकगतानां कर्मिणां भक्षणं नाम स्वभोगोपकरणीकरणमेव। सूत्रितं च ‘ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति’ [ ब्र० सू० ३ । १ । ७ ] इति। भगवता भाष्यकृताऽपि जीवस्य देवानां भोगोपकरणत्वादित्यभिप्रायमन्नत्वेन भक्ष्यत्ववचनमतस्तद्भाक्तं तेन तृप्तिरेव च देवानां भक्षणमिति। श्रूयते—‘ न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा

तृप्यन्ति [ छा० ३ । ६ । १ ] इति भाषितम् । अतो नृत्तगीतादिप्रदर्शनेनाऽऽजानसिद्धदेवोपकरणत्वमेव तद्भक्ष्यमिति भावः ।

तेषां यदा तत्पर्यवैति ।

तेषां कर्मिणां भोगसाधनभूतं कर्म पर्यवैति परिगच्छति परिक्षीयत इत्यर्थः ।

इममेवाऽऽकाशमभिनिष्पद्यन्ते ।

यथा सुवर्णपिण्डोऽत्यन्तानलसंयोगात्प्रलीयत एवं कर्मक्षये कर्मिणः प्रलीनाः सन्तः सूक्ष्मा आकाशसदृशा इव भवन्ति । सूत्रितं च—'सामाभ्यापत्तिरुपपत्तेः' [ ब्र० सू० ३ । १ । २२ ] इति । भाष्ये च तदापत्तिवचनं तत्संसर्गकृततत्साहश्याभिप्रायमिति भाषितम् ।

आकाशाद्वायुम् ।

अभिनिष्पद्यन्त इति शेषः । अत्राप्यवरोहतां कर्मिणां पूर्वसिद्धवायुभावासंभवाद्वायुसाहश्यमेवार्थः ।

वायोर्वृष्टिं वृष्टेः पृथिवीम् ।

अभिनिष्पद्यन्त इत्यनुषङ्गः ।

ते पृथिवीं प्राप्यान्नं भवन्ति ।

ओषधिवनस्पतिमाषादिभक्ष्यसंसर्गिणो भवन्तीत्यर्थः ।

ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते ।

ततस्ततः परं योषाग्नौ रेतोरूपाभिराहुतिभिः पुरुषरूपा जायन्त इत्यर्थः ।

ते लोकान्प्रत्युत्थायिनः ।

ते पुरुषाः पुण्यलोकान्प्रत्युत्थायिन उत्थानशीला भवन्ति ।

त एवमेवानुपरिवर्तन्ते ।

त एते केवलकर्मिणो गतागते कुर्वन्तीत्यर्थः । एतावता पञ्चमतृतीयप्रश्नयोरुत्तरमुक्तं भवति ।

अथ य एतौ पन्थानौ न विदुस्ते कीटाः
पतङ्गा यदिदं दन्दशूकम् ॥ १६ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य द्वितीयं
ब्राह्मणम् ॥ २ ॥

---

ये प्राणिनो देवपितृयाणमार्गद्वयं न जानन्ति विद्याकर्मविसृष्टतया मार्गद्वयानधिकारिणस्ते कीटपक्षिदंशमशकादिरूपेण पुनः पुनर्भवन्ति । अत्रैव लोके परिभ्रमन्तीति यावत् । 'वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता ३' [ बृ० ६ । २ । २ ] इति तृतीयप्रश्नस्योत्तरमुक्तं 'पितृलोकाच्चन्द्रम्' इत्यनेन गन्तव्यदेशविषयकप्रथमप्रश्नस्योत्तरमुक्तं भवति । 'इममेवाऽऽकाशमभिनिष्पद्यन्ते' इत्यादिना 'वेत्थो यथेमं लोकं पुनरापद्यन्ता ३' इति पुनरागमनप्रकारविषयकद्वितीयप्रश्नस्योत्तरमुक्तं भवति 'वेत्थो देवयानस्य पथः प्रतिपदं पितृयाणस्य वा' इति देवयानपितृयाणव्यावर्तकभेदविषयपञ्चमप्रश्नस्य 'तेऽर्चिरभिसंभवन्ति' 'ते धूममभिसंभवन्ति' इति ग्रन्थसंदर्भाभ्यामुत्तरमुक्तं भवति ॥ १६ ॥

इति बृहदारण्यकोपनिषत्प्रकाशिकायां षष्ठाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

---

एवं ज्ञानकर्मणोर्गतिरुक्ता । तत्र कर्मसाधनं वित्तं महत्त्वसाध्यमिति वित्तार्जनोपायभूतमहत्त्वस्य प्राप्तये मन्थाख्यं कर्माऽऽरभ्यते—

स यः कामयते महत्प्राप्नुयामिति ।

अहं महान्स्यामिति य आत्मनो महत्त्वं कामयते सः ।

उदगयन आपूर्यमाणपक्षस्य पुण्याहे
द्वादशाहमुपसद्व्रती भूत्वा ।

उदगयने पूर्वपक्षे पुण्याहे कस्मिंश्चिद्दिने द्वादशाहान्युपसद्व्रति उपसत्सु यत्प्रसिद्धं व्रतं पयोमात्रभक्षणात्मकं तद्व्रतवान्भूत्वा ।

औदुम्बरे कꣳसे चमसे वा ।

उदुम्बरनिर्मिते कंसाकारे चमसाकारे वा ।

सर्वौषधं फलानीति संभृत्य ।

सर्वौषधिसमूहं फलानि चान्यदपि यत्संभरणीयं तत्सर्वं संभृत्य ।

परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्य ।

परिसमूहनपरिलेपने भूमिसंस्कारः । अग्निमुपसमाधाय स्मार्तमग्निं पुरतः संस्थाप्य दर्भैः परिस्तीर्य ।

आवृताऽऽज्यꣳ सꣳस्कृत्य ।

आवृता स्मृत्युक्तपरिपाट्येत्यर्थः । वाऽऽवृत्परिपाटी अनुक्रम इत्यमरः ।

पुꣳसा नक्षत्रेण मन्थम् ।

नक्षत्रे[षु] स्त्रीपुंनपुंसकविभागः शास्त्रप्रसिद्धः । तत्र पुंनक्षत्रं प्रशस्तम् । प्रशस्ते नक्षत्रे मन्थं सर्वौषधविशिष्टम् ।

संनीय जुहोति ।

अग्निसमीपं नीत्वा यावन्त इत्यादिवक्ष्यमाणैश्चतुर्भिर्मन्त्रैराज्येन जुहोतीत्यर्थः ।

यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति
पुरुषस्य कामान् । तेभ्योऽहं भागधेयं
जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु
स्वाहा । या तिरश्ची निपद्यतेऽहं विध-
रणी इति तां त्वा घृतस्य धारया
यजे सꣳराधनीमहꣳ स्वाहा ॥ १ ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ
हुत्वा मन्थे सꣳस्रवमवनयति ।

अग्नेः पश्चात्स्थिते मन्थे हुतशिष्टमाज्यं निनयेदित्यर्थः । इतः परं द्वे द्वे आहुती हुत्वा संस्रवनिनयनम् ।

प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ।

इतः परमेकैकामाहुतिं हुत्वा संस्रवनिनयनम् ।

रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ॥२॥

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ॥ ३ ॥

अथैनमभिमृशति ।

अभिमर्शनमन्त्रमाह—

भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्ये-
कसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गी-
थमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रा-
वितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्यन्न-
मसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥४॥

अथैनमुद्यच्छति ।

भक्षणार्थं वक्ष्यमाणैर्मन्त्रैर्मन्थं हस्तेनोद्गृह्णातीत्यर्थः ।

आमꣳस्यामꣳहि ते महि स हि राजेशानोऽधि-
पतिः स माꣳराजेशानोऽधिपतिं करोत्विति ॥५॥

अथैनमाचामति ।

वक्ष्यमाणैर्मन्त्रैर्भक्षयतीत्यर्थः ।

तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा । भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः । मधु द्यौरस्तु नः पिता । भुवः स्वाहा । धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाꣳअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । स्वः स्वाहेति । सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदꣳसर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य ।

स्पष्टोऽर्थः ।

जघनेनाग्निं प्राक्शिराः संविशति ।

जघनेनाग्निमग्नेः पश्चात्प्राक्शिराः शयीतेत्यर्थः ।

प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥ ६ ॥

वंशं ब्राह्मणं जपेदित्यर्थः । प्रातःसंध्यामुपास्य वक्ष्यमाणेन मन्त्रेणाऽऽदित्यमुपतिष्ठत इत्यर्थः ॥ ६ ॥

तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच ।

अरुणपुत्र उद्दालकः स्वशिष्याय वाजसनेयाय याज्ञवल्क्याय तं हैतमुक्तं कर्मानुष्ठानप्रकारमुक्त्वाऽन्यदप्युवाच ।

किं तदित्यत्राऽऽह—

अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥

एनं संस्रवसंस्कृतं मन्थं शुष्के स्थाणौ यदि निषिञ्चेत्तस्य माहात्म्याच्छाखाश्च जायेरन्पत्राणि च प्ररोहेयुः ॥ ७ ॥

एवमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्शाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥

एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥

एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय
जाबालायान्तेवासिन उक्त्वोवाचापि
य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेर-
ञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥
एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वो-
वाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जा-
येरञ्शाखाः प्ररोहेयुः पलाशानीति तमेतं
नापुत्रयानान्तेवासिने वा ब्रूयात् ॥ १२ ॥
चतुरौदुम्बरो भवति ।

तदेवौदुम्बरचातुर्विध्यं दर्शयति—

औदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदु-
म्बर्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति ।

तान्येव गणयति—

व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधू-
माश्च मसूराश्च खल्वाश्च खलकुलाश्च ।

कुलित्था इत्यर्थः ।

तान्पिष्ट्वा दधनि मधुनि घृत उप-
सिञ्चत्याज्यस्य जुहोति ॥ १३ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

---

दधिमधुघृतैरुपसिच्य पेषणं कृत्वाऽऽज्येन जुहोतीत्यर्थः ॥ १३ ॥

इति बृहदारण्यकोपनिषत्प्रकाशिकायां षष्ठाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

---

आत्मनः पितुश्च विशिष्टपुत्रोत्पादकं कर्म वक्तुं ब्राह्मणमारभ्यते—

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपा-
मोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि
फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥

स ह प्रजापतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति ।

अस्मै रेतस इत्यर्थः ।

स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाऽध उपास्त ।

मैथुनाख्यमध उपासनं कृतवानित्यर्थः ।

तस्मात्स्त्रियमध उपासीत ।

अद्यापीति शेषः ।

मिथुनीकरणस्य वाजपेयफलावाप्तये वाजपेयसंपत्तिं दर्शयति—

स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् ।

काठिन्यसामान्याद्ग्रावा पुंलिङ्गमित्यर्थः । आत्मनः पुंलिङ्गं स्त्रीव्यञ्जनं प्रति प्रागग्रं समुदपारयदुत्पूरितवान् ॥ २ ॥

तेनैनामभ्यसृजत् ॥ २ ॥

तेन लिङ्गेनैनां स्त्रियं संसर्गं कृतवान् ॥ २ ॥

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्मा-
धिषवणे समिद्धो मध्यतस्तौ मुष्कौ ।

चर्माधिषवणे अधिषवणफलके मध्यतस्तौ योनिमध्यतस्तौ मुष्कौ वृषणौ समिधौ (द्धोऽग्निः) ।

स यावान्वै वाजपेयेन यजमानस्य लोको भवति तावा-
नस्य लोको भवति य एवं विद्वानधोपहासं चरति ।

एवं वाजपेयसंपत्तिं विद्वानधोपहासं मैथुनं यश्चरति अनुतिष्ठति तस्य वाजपेयेन यावाँल्लोकस्तावाँल्लोको भवतीत्यर्थः ।

आसाꣳ स्त्रीणाꣳ सुकृतं वृङ्क्ते ।

आवर्जयति ।

अथ य इदमविद्वानधोपहासं चर-
त्याऽस्य स्त्रियः सुकृतं वृञ्जते ॥३॥

वाजपेयप्रकारानभिज्ञस्य सुकृतं स्त्रिय एव प्राप्नुवन्तीत्यर्थः ॥ ३ ॥

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणि-
राहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहै-
तद्ध स्म वै तद्विद्वान्कुमारहारित आह ।

एतदभिज्ञा उद्दालकादयस्त्रयो वक्ष्यमाणप्रकारेणाऽऽहुरित्यर्थः ।

बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्मा-
ल्लोकात्प्रयन्ति य इदमविद्वाꣳसोऽधोपहासं चरन्ति ।

येऽविद्वांस एतत्प्रकारानभिज्ञा मैथुनं कर्माऽऽचरन्ति ते मर्या मरणधर्माणो ब्राह्मणायना ब्राह्मणा अयनं येषां ते ब्रह्मबन्धवो जातिमात्रोपजीविन इति यावत् । निरिन्द्रिया निर्वीर्याः ज्ञानकर्मबलहीनाः । विसुकृतः सुकृतशून्याः । बहवो बहुविधाः।एवंभूताः सन्तोऽस्माल्लोकात्प्रयन्तीत्यर्थः ।

बहु वा इदꣳ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥

एतद्विद्यानिष्ठस्याल्पं बहु वा जाग्रत्स्वप्नयो रेतः स्कन्देत् ॥ ४ ॥

तदभिमृशेदनु वा मन्त्रयेत ।

तस्य रेतसोऽभिमर्शनं वाऽनुमन्त्रणं वा वक्ष्यमाणेन मन्त्रेण कुर्यादित्यर्थः ।

यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्य-
दपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुन-
स्तेजः पुनर्भगः । पुनरग्निर्धिष्ण्या यथास्थानं कल्प-
न्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ
वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥

अभिमर्शनपक्ष आददं इत्येवमन्तेनानामिकाङ्गुष्ठाभ्यां तद्रेतो गृहीत्वा पुनर्मामिति मन्त्रेण स्तनमध्ये भ्रूमध्ये वा निमृज्यात् ॥ ५ ॥

अथ यद्युदक आत्मानं पश्येत्तदभिमन्त्रयेत मयि
तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति ।

यद्ययं विद्वानुदक आत्मप्रतिबिम्बं पश्येत्तदा मयि तेज इति मन्त्रेणाभिमन्त्रयेतेत्यर्थः ।

श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासाः ।

स्त्रीणां मध्ये या रजस्वला सा श्रीः । उत्कृष्टेत्यर्थः ।

तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ।

स्त्रीणामृतुप्राप्तिरेव यशः । तादृशयशोयुक्तां मलोद्वाससमभिगम्याऽऽवाभ्यां पुत्र उत्पादयितव्य इत्युपमन्त्रयेतेत्यर्थः ॥ ६ ॥

सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात् ।

उपमन्त्रिताऽपि सा यदि वाञ्छितं न दद्यादेनामाभरणादिना वशी कुर्यादित्यर्थः ।

सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा
पाणिना वोपाहत्यातिक्रामेदिन्द्रियेण ते
यशसा यश आदद इत्ययशा एव भवति॥ ७ ॥

आभरणादिनाऽप्यवशीकृता दण्डेन वा हस्तेन वा पीडयित्वा 'इन्द्रियेण' इति मन्त्रेणातिक्रम्य गच्छेत् । सा च तदाप्रभृति अरजस्का भवति ॥ ७ ॥

सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश
आदधामीति यशस्विनावेव भवतः ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

स यामिच्छेत्कामयेत मेति तस्यामर्थं
निष्ठाय मुखेन मुखꣳ संधाय ।

वाजपेयसंपत्तिप्रकारविद्यां स्वीयां स्त्रियं मां कामयेतेतीच्छेत्तस्यामर्थं निष्ठाय तस्यां प्रजननेन्द्रियं निक्षिप्येत्यर्थः । मुखेन मुखं संधाय ।

उपस्थमस्या अभिमृश्य जपेदङ्गा-
दङ्गात्संभवसि हृदयादधिजायसे ।
स त्वमङ्गकषायोऽसि दिग्धविद्ध-
मिव मादयेमाममूं मयीति ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

अथ यामिच्छेन्न गर्भं दधीतेति ।

गर्भिणी मा भूदिति यामिच्छेदित्यर्थः ।

तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधा-
याभिप्राण्यापान्यादिन्द्रियेण ते रेतसा
रेत आदद इत्यरेता एव भवति ॥ १० ॥

अभिप्राण्यापान्यात् । श्वासं गृहीत्वा विसृजेदित्यर्थः । शिष्टं स्पष्टम् ॥ १० ॥

अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन
मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा
रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥

अत्रापाननान्तेऽभिप्राणनमिति शेषः ॥ ११ ॥

अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपा-
त्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मि-
न्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाऽक्ता जुहुया-
न्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति ।

यस्य जायाया उपपतिः स्यात्तं चेद्द्विष्यादमुं हरिष्यामीति यदि मन्येत तदाऽऽमपात्रेऽग्निमुपसमाधाय सर्वं कर्म प्रतिलोमं कृत्वा शरमयं बर्हिस्तीर्त्वा तस्मिन्नग्रावाज्येनाक्ताः शरेषीका ‘ मम समिद्धे ’ इत्यादि-मन्त्रैर्जुहुयात् । अन्तेऽसाविति शत्रोर्नाम गृह्णीयात् ।

मम समिद्धेऽहौषीः पुत्रपशूꣳस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशा पराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति ।

एवंविद्ब्राह्मणो यं शपति स निरिन्द्रियो विसुकृतः सन्मृतो भवतीत्यर्थः ।

तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत् ।

एवंविदः श्रोत्रियस्येत्यर्थः ।

उत ह्येवंवित्परो भवति ॥ १२ ॥

परो भवति शत्रुः सन्नभिचरतीति भावः ॥ १२ ॥

अथ यस्य जायामार्तवं विन्देत्त्र्यहं कꣳसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत्॥ १३ ॥

अथ यस्य जायेत्यादिग्रन्थः श्रीर्ह वा एषेत्यतः पूर्वं द्रष्टव्यः सामर्थ्यात् । वृषलः शूद्रो नोपहन्यान्न स्पृशेत् । आप्लुत्य स्नात्वाऽहतवासा इति व्यवहितेन संबन्धः । स्नातां तां वक्ष्यमाणस्थालीपाकार्थं व्रीह्यवघाते नियुञ्ज्यादित्यर्थः ॥ १३ ॥

स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥

अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥

अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै॥१६॥

उदौदनमुदकौदनं शुद्धौदनमित्यर्थः ॥ १६ ॥

अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥

दुहितुः पाण्डित्यं लौकिकविषये वेदेऽनधिकारादिति द्रष्टव्यम्॥ १७॥

अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीथः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वाऽऽर्षभेण वा ॥ १८ ॥

विजिगीथः प्रसिद्धः । समितिंगमः सभां गतः । शुश्रूषितां रमणीयां माननीयार्थाम् । औक्षेण वाऽऽर्षभेण वा । उक्षा रेतःसेचनसमर्थः पुंगव इत्यर्थः ॥ १८ ॥

अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति ।

अपरेद्युः प्रातःकाले स्थालीपाकावृता स्थालीपाकविधिनाऽऽज्यं संस्कृत्य स्थालीपाकमुप[ह]त्य जुहोति । चरोरवदायाग्नये स्वाहेति स्वाहान्तैर्मन्त्रैर्जुहोतीत्यर्थः ।

हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ

प्रपूर्व्यां सं जायां पत्या सहेति ॥ १९ ॥

उत्तिष्ठेतिमन्त्रेण पत्नीं त्रिः प्रोक्षयेदित्यर्थः ॥ १९ ॥

अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वꣳ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तय इति ॥ २० ॥

अमोऽहमस्मीति मन्त्रेणैनां संगच्छेतेत्यर्थः ॥ २० ॥

अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनुमार्ष्टि ।

अनुलोमां शिर आरभ्येत्यर्थः ।

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥

हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ । तं ते गर्भं हवामहे दशमे मासि सूतवे । यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥

सोष्यन्तीमद्भिरभ्युक्षति । यथा वायुः पुष्करिणीꣳ समिङ्गयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा । इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावराꣳ सहेति ॥ २३ ॥

जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदा–

ज्यꣳ संनीय पृषदाज्यस्योपघातं जुहोति ।

अङ्के पुत्रमाधाय पृषदाज्यं सदध्याज्यं कंसे संनीय संयोज्येत्यर्थः ।

अस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा । मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टꣳ सुहुतं करोतु नः स्वाहेति॥२४॥

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिः ।

दक्षिणे कर्णे मुखं निधाय वाग्वागिति त्रिर्जपेदित्यर्थः ।

अथ दधि मधु घृतꣳ संनीयानन्तर्हितेन जातरूपेण प्राशयति ।

अनन्तर्हितेनाव्यवहितेन जातरूपेण हिरण्येन संसृज्येत्यर्थः ।

भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५॥

अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति ।

दापयेदित्यर्थः ।

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति॥२७॥

अथास्य मातरमभिमन्त्रयते । इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मा-

न्वीरवतोऽकरदिति तं वा एतमाहुरतिपिता बताभूरति-
पितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया
यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो
जायत इति ॥ २८ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

एवंविदो ब्राह्मणस्य जातः पुत्रः पितरमतिशयितवान् । पितामहमत्य(ति)शेते स्तुत्यानां परमां काष्ठां प्राप्त इति स्तुत्यो भवतीत्यर्थः ॥ २८ ॥

इति बृहदारण्यकोपनिषत्प्रकाशिकायां षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात् । गुणवान्पुत्रो भवतीति प्रस्तुतत्वात् । स्त्रीविशेषकृतपुत्रविशेषेणाऽऽचार्यपरम्परा कीर्त्यते—

अथ वंशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्थीपुत्रादौपस्वस्थीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्का-

---

१ स्वस्तीपु० अत्रत्यमुद्रित पुस्तके । २ स्वस्ती० अ० मुद्रि० पु० ।

रुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्रात्क्रौञ्चिकीपुत्रो वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रात्प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥२॥

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्यादाम्भिण्य आदित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥ ३ ॥

सामानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थान्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायन-

स्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः
प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ॥

स्वतः सर्वज्ञमित्यर्थः ।

ब्रह्मणे नमः ॥ ४ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

आचार्येभ्यो नमस्कृत्याथ वंशस्य कीर्तयेत्स्वधा पूर्वेषां भवति ते नायुर्दीर्घमश्नुत इत्युक्त्वाऽनुक्रमेद्वंशमा ब्रह्मणो नयेदिति आ ब्रह्मणो वंशपरम्पराकीर्तनस्य श्रेयोहेतुत्वं शास्त्रसिद्धमिहानुसंधेयम् ॥ ४ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत शास्त्रसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिसमधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु बृहदारण्यकप्रकाशिका समाप्ता ॥

---